# संस्कृत-वाङ्मय का बृहद् इतिहास

## तृतीय-खण्ड
## आर्षकाव्य
(रामायण तथा महाभारत)

*प्रधान सम्पादक*
पद्मभूषण आचार्य श्री बलदेव उपाध्याय

*सम्पादक*
प्रो. भोलाशंकर व्यास

उत्तर प्रदेश संस्कृत संस्थान
लखनऊ

# संस्कृत-वाङ्मय का बृहद् इतिहास

तृतीय-खण्ड

**आर्षकाव्य**

(रामायण तथा महाभारत)

*प्रधान सम्पादक*

**पद्मभूषण आचार्य बलदेव उपाध्याय**

सम्पादक

**प्रो. भोलाशंकर व्यास**


**उत्तर प्रदेश संस्कृत संस्थान**

**लखनऊ**

प्रकाशक :
**अरुण कुमार ढौंडियाल**
निदेशक :
उत्तर प्रदेश संस्कृत संस्थान, लखनऊ

प्राप्ति-स्थान :
**विक्रय विभाग :**
उत्तर प्रदेश संस्कृत संस्थान, नया हैदराबाद,
लखनऊ - २२६००७
फोन : ७८०२५१

प्रथम संस्करण :
वि.सं. २०५७ (२००० ई.)
प्रतियाँ : ११००
मूल्य : रु. ४००/- (चार सौ रुपये)


मुद्रक : **शिवम् आर्ट्स,** निशातगंज, लखनऊ । दूरभाष : ३८६३८९

## भूमिका

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी।।

संस्कृतसाहित्ये महर्षि वाल्मीकिविरचितं रामायणमादिकाव्यं मन्यते, स्वीक्रियते च वाल्मीकिः समालोचकवरैरादिकविः। अस्ति रामायणमेकं विलक्षणं महाकाव्यं, यस्मिन् सम्यग् दृश्यते अस्य रचयितुरद्भुता काव्यप्रतिभा। रामायणं हि वरीवर्ति परवर्तिनां रामचरितावलम्बिनां महाकाव्यानां नाटकादीनाञ्चोपजीव्यभूतं ग्रन्थरत्नम्। वर्णितञ्चात्र ग्रन्थे भारतीयानां धर्म संस्कृति-भक्ति-मैत्री भावानामौदात्यम्। रामायणस्य स्थायित्व-विषये विद्यते भणितिरियमर्थमवती। तथाहि-

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद् रामायणकथा लोकेषु प्रचरिष्यति।। बा.का.२.३६।।

मानवजीवनस्योन्नतये रामायणे वाल्मीकिना ये प्रशस्तगुणाः स्वलेखन्या समुल्लिखितास्ते न केवलं भारतवासिनामपि तु समेषामपि मनुष्याणां कृते सन्ति सर्वथा समादरणीयाः। मानवजीवनस्य स्थायिमूल्यवद्भिस्तत्त्वै निर्मितं रामायण-काव्यं शाश्वतवादस्य निदर्शनमित्यस्माकं मतम्।

संस्कृतसमालोचकै रामायणं सिद्धरसाख्यं काव्यमुक्तम्-

सन्ति सिद्धरसप्रख्या ये च रामायणादयः।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी।।
ध्वन्यालोकः, पृ.१४८।।

स्फुटीकृतश्च सिद्धरसशब्दार्थो लोचनटीकायामभिनवगुप्तेन। तथाहि-सिद्धः आस्वादमात्रशेषः, न तु भावनीयो रसो यस्मिन्। अर्थात् यत्र न क्रियते रसस्य भावना, अपितु रस एवास्वादरूपेण परिणमते स रससिद्धः प्रबन्ध उच्यते। रामायणे वर्णितं सीतारामयोरुदात्तं चरित्रं श्रावं श्रावं दर्शं दर्शञ्च सामाजिकैरनुभूयत एवास्वाद्योरसः, अतः सिध्यति रामायणं सिद्धरसं काव्यम्।

### उपक्रमः-

आसीद् वाल्मीकि दैवगुणविभूषितो दिव्यदृष्टियुत एको महाकविः। प्रथिता तस्य ऋतम्भरा प्रज्ञा। कवेर्वास्तविक स्वरूपस्य प्रतीतिः साहित्यालोचकैर्वल्मीकभवे मुनावेव प्राप्ता। क्रान्तद्रष्टुः कवेः कल्पनायां भवति दर्शन-वर्णनयोर्मञ्जुलः समन्वयः। कृतमासीद् महर्षिणा वाल्मीकिना वस्तूनां नित्यरूपेण निर्मलं दर्शनम्, किन्तु वर्णनोदयात् प्राक् तस्य कविता नोदिता। उक्तञ्च भट्टतौतेन-

तथाहि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।
नोदिता कविता लोके यावज्जाता न वर्णना।। [१]

रसकूलमाश्रित्य भविता सुरभारती काव्यधारा प्रवाहिता, इत्यस्याभासस्तस्मिन्नेव क्षणेऽभूत् यदा प्रेमपरायस्य सहचरस्याकस्मिकेन वियोगेन भृशं सन्तप्तायाः क्रौञ्च्याः करुणक्रन्दनमाकर्ण्य महर्षेर्हृदयस्य शोकः श्लोकत्वमागतः।[२] व्याधबाणविद्धस्य क्रौञ्चस्य कृते विलपन्त्याः क्रौञ्च्या आर्तनादेन क्षुब्धस्य महर्षे र्मुखात् सहसा निःसृतः श्लोक एवमासीत्-

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।। बालकाण्डे २.१५।।**

इममेव सहसोद्गतं श्लोकं श्रुत्वा ब्रह्मा स्वयमेव तत्रागत्य रामचरितं काव्यबद्धं कर्तुमृषिं प्रेरयामास।[३] रामायणस्य निर्मितिरस्या एव प्रेरणायाः परिणतिः। लौकिक संस्कृते लघुगुरुनिवेशयुतस्य समवर्णवतोऽनुष्टुब्वृत्तस्य प्रथमः प्रयोगो वाल्मीकिनैव कृतः। रामायणकथाया अस्तीदमेकं वैलक्षण्यं यदस्या गायकौ वर्तेते वाल्मीकिशिष्यौ रामपुत्रौ कुशलवौ। इमावेव यमलभ्रातरौ रामस्य पुरस्तात् समस्तं रामायणं मधुरस्वरैरगायताम्। आसीद वाल्मीकिः रामस्य समकालिकः। प्राप्तदिव्यदृष्टि र्वाल्मीकिः सीतारामयोरतीतानागतं प्रकटगुप्तं चरितं सम्यग् निभाल्य तत्काव्यरूपञ्चकार। अस्ति किञ्चिन्निदर्शनमीदृशस्याद्भुतकथा संघटनस्य विश्वस्य कस्मिन्नपि साहित्ये? उत्तरन्तु नकारात्मकमेव भविष्यत्ति।

आदिकाव्यस्य रामायणस्य अपरा संज्ञा विद्यते 'चतुर्विंशतिसाहस्रीसंहिता'। काव्येऽस्मिन् चतुर्विंशति सहस्रपरिमिताः श्लोकाः सन्ति। काव्यमिदं गायत्र्याः चतुर्विंशतिवर्णैः सम्पुटितमित्यपि चित्रमेव। रामायणे सन्ति बहवः पाठभेदाः। उत्तरभारतात्, वंगप्रदेशात्, कश्मीरात् दक्षिणभारतात् च प्राप्तानि यानि संस्करणानि, तेषु दृश्यतेऽधिकः पाठभेदः। बाह्यान्तरिकप्रमाणै रामायणस्य रचनाकालो गौतमबुद्धात् पूर्वं मन्यते।

## चरित्राङ्कनम्-

आदिकवेर्वाल्मीकेः काव्यमन्दिरस्याराध्यदेवोऽस्ति मर्यादा पुरुषोत्तमो रामचन्द्रः। विभिन्नासु सम-विषम परिस्थितिषु वर्तमानः पुरुषः कथं सधैर्यं स्वशील-सौन्दर्यं रक्षति, इति वाल्मीकिनैव शिक्ष्यते लोकः। समग्रादर्शानां पुञ्जीभूतविग्रहस्य, शोभनगुणविशिष्टस्य रामस्योदात्तता अस्त्येव सर्वथा स्पृहणीया। कृतज्ञो राम एकेनैव कृतेनोपकारेण तुष्यति, न च स्मरति शतमपकाराणाम्। तथाहि-

---

१. संस्कृत साहित्यस्येतिहासे, ३३ पृष्ठे उद्धृतम्।
२. काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा। क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। ध्वन्यालोके,१.५
३. बालकाण्डम्,२.२३, ३२

कथञ्चिदुपकारेण कृतेनैकेन तुष्यति।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया। २.१.११।।

सीतान्वेषणसफलं हनुमन्तं प्रति कथितेन वाक्येनैकेनैव रामहृदस्यौदार्यं सम्यक् प्रतीयते। भवतु विपन्नो हनुमान् येन तमुपकरोमीति मनसाऽपि न शोचति रामचन्द्रः। तथाहि-

मय्येव जीर्णतां यातु यत् त्वयोपकृतं हरे।
नरः प्रत्युपकारार्थी विपत्तिमभिकांक्षति।। ७.४०.२४।।

रामस्य हार्दिकोदारताया विद्यतेऽपरमुदाहरणं रावणवधोत्तरे विभीषणं प्रत्युक्तौ निम्नलिखितायाम्-

मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव।। ६.१०६.२५।।

"विभीषण! मृत्युरेव वैरभावस्य समाप्तिः, रावणवधेन गतः स वैरभावः। साम्प्रतं रावणो यथा तव भ्राता तथैव ममापि। विधीयतामस्य यथोचितः संस्कारः"। शत्रुं प्रति ईदृशी उदारभावना युद्धक्षेत्रे रामस्यापूर्वा एव।

वर्ततेऽभूतपूर्वा रामस्य धीरता। महत्यामपि विपत्तौ नोत्पद्यते कश्चिच्चित्तविकारः रामस्य। राज्यवञ्चितस्य वनं गन्तुकामस्य रामस्य मुखे न लक्ष्यते काऽपि चिन्तारेखा। तथाहि-

न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम्।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया।। २.१९.३३।।

अस्ति लोकप्रियस्य शुभलक्षणस्य रामस्य दर्शनं विना मानव-जीवनं सर्वथा व्यर्थम्। तथाहि-

यश्च रामं न पश्येत्तु यं च रामो न पश्यति।
निन्दितः सर्वलोकेषु स्वात्माप्येनं विगर्हते।।२.१७.१४।।

अस्तीदमेव सर्वलोकहितप्रदस्य प्रियदर्शनस्य रामस्य चरितरहस्यम्। अतो धर्मविग्रहो रामो वरीवर्ति लौकैर्नमस्यः।

भगवत्याः सीताया अलोकसामान्यं चरित्रं भारतीयाया नार्याः महत आदर्शस्य प्रतीकमिव प्रतिभाति। रावणेन मुहुर्मुहुः प्रार्थिताया जानक्यास्तं प्रति तिरस्कृतिवचनं प्रतिव्रताया ललनाया गौरवगाथां व्यनक्ति। तथाहि-

चरणेनापि सव्येन न स्पृशेयं निशाचरम्।
रावणं किं पुनरहं कामयेयं विगर्हितम्।।५.२६.१० ।।

अर्थात्, का कथा रावणेन सह मम प्रेम्णः, अहन्तु तं निन्दितकर्माणं निशाचरं वामेनापि चरणेन न स्पृशामि। रावणविजयानन्तरं रामो रावणगृहनिवासकारणं सीता-चरित्रदोषमारोयन् सर्वजनसमक्षमेव बहु कटुवचनमुवाच। उत्तरे भृशं दुःखितया सीतया यदुक्तं तदतीव मर्मस्पर्शि वचः कस्य सचेतनस्य हृदयं न द्रवीकरोति? उक्तञ्च सीतया-

**त्वया तु नरशार्दूल! क्रोधमेवानुवर्तता।**
**लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम्।।**
**न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीड़ितः।**
**मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम्।। ६.११६.१४,१६।।**

अर्थात्, हे नरश्रेष्ठ ! क्रोधाविष्टेन भवता सामान्येन लोकेनेव मम दुर्बलं स्त्रीत्वं पुरस्कृत्य मयि दोषदर्शनं कृतम्। मदीयं सबलं पातिव्रतमयं पत्नीत्वन्तु भवता पृष्ठतः कृतम्। अथ च सीतया स्वशुद्धता अग्निपरीक्षया प्रमाणीकृता। सीताया इयं वह्निशुद्धिः पतिव्रतानारीणां सम्मानरक्षाया अप्रतिमनिदर्शनं वर्तते। अवसाने च यदा रामेण पुनरपि वाल्मीकिसमक्षं चारित्र्यशुद्धिं प्रमाणयितमुक्ता सीता, शपथपूर्वकं रसातलगमनमेव वरं मन्यमाना पृथिवीं विवरं याचयामास-

**यथाहं राघवादन्यं मनसापि न चिन्तये।**
**तथा मे माधवी देवी विवरं दातुमर्हति।।**
**मनसा कर्मणा वाचा यथा रामं समर्चये।**
**तथा मे माधवी देवी विवरं दातुमर्हति।।७.९७.१४-१५।।**

इत्थं कथयन्ती सीता रसातलं प्रविष्टा। सीताया अस्मिन् रसातलप्रवेशे तस्या अन्तर्वेदनाया मूककथा कस्य मनांसि नोद्वेलयति। सीता-रामयो निर्मलभव्यचरित्रचित्रणं वाल्मीकेः ऋतम्भरायाः प्रज्ञायाः शोभनं निदर्शनमिति सर्वैरेव मनीषिभिः स्वीक्रियते।

महर्षे र्वाल्मीकेर्दृष्टौ विद्यते मानवताया निकषः चरित्रम्। सीता-रामयोः प्रशस्तं चरित्रमेव आर्य-चरित्रस्य आदर्शः, मानवतायाश्चरमाभिव्यक्तिश्च।

सत्यसन्धस्य राज्ञो दशरथस्य, पुत्रवत्सलायाः कौशल्यायाः, भ्रातृप्रेमपरायणस्य भरतस्य, सेवा- धर्मिणो लक्ष्मणस्य, सन्मित्रस्य सुग्रीवस्य, अनन्यसेवकस्य हनुमतश्च लोकोत्तराणि चरित्राण्यपि सन्ति लोकेऽनुकरणीयानि।

## महाभारतम्-

अस्ति महर्षिवेदव्यासकृतं 'महाभारतम्' आर्यसंस्कृते भारतीय सनातन धर्मस्य चैकं महद् ग्रन्थरत्नम्। भगवता व्यासेन स्वयमेव महाभारते वर्णितानां विषयाणामुल्लेखः कृतः। तथाहि-

ब्रह्मन् वेदरहस्यं च यच्चान्यत् स्थापितं मया।
साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया ।।
इतिहासपुराणानामुन्मेषं निर्मितं च यत्।
भूतं भव्यं भविष्यं च त्रिविधं कालसंज्ञितम्।।
जरामृत्युभयव्याधि भावाभावविनिश्चयः।
विविधस्य च धर्मस्य ह्याश्रमाणां च लक्षणम्।।
चातुर्वर्ण्यविधानं च पुराणानां च कृत्स्नशः।
तपसो ब्रह्मचर्यस्य पृथिव्याश्चन्द्रसूर्ययोः ।।
ग्रहनक्षत्रताराणां प्रमाणं च युगैः सह।
ऋचो यजूंसि सामानि वेदाध्यात्मं तथैव च।।
न्यायशिक्षा चिकित्सा च दानं पाशुपतं तथा।
हेतुनैव समं जन्म दिव्यमानुष संज्ञितम्।।
यच्चापि सर्वगं वस्तु तच्चैव प्रतिपादितम्।
परं न लेखकः कश्चिदतेस्य भुवि वर्तते।।
आदिपर्वणि, अनुक्रमाणिका, १.६२-७०।।

वस्तुतो महाभारतं गूढार्थयुक्तं ज्ञान-विज्ञानशास्त्रम्, राजनैतिकदर्शनम्, कर्मभक्तियोगयोश्शास्त्रं, अध्यात्मविद्या, आर्यजातेरितिहासः, सर्वार्थसाधकं सर्वशास्त्रभाण्डारं विद्यते। सूक्ष्मतत्त्वज्ञैर्ऋषिभिरितिहासपुराणयोः पञ्चमवेदत्वमूरीकृत्य महाभारतस्य महत्त्वं स्फुटमेव प्रतिपादितम्। महाभारतस्य विषयवैपुल्येन "यन्नेहास्ति न तत् क्वचित्" इत्युक्तिरन्वर्था भवति। वर्तते महाभारतं भारतदेशस्य समुज्ज्वलज्ञानपरम्पराया एकमात्रं स्मारकम्। अतएव महत्त्व भारवत्त्ववैशिष्ट्यकारणादेव ग्रन्थरत्नमिदं 'महाभारतमुच्यते'[1]। महाभारतमाहात्म्यविषये वेदव्यास एवं भणति- वेदोपनिषदां रहस्यं जानन्नपि महाभारताख्यानानभिज्ञः कश्चिदपि पुरुषो न विचक्षणो भवितुमर्हति। तथाहि-

यो विद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः।।[2]

महाभारतस्य सांस्कृतिकमूल्यमपि विद्यते महत्त्वशालि। अस्य ग्रन्थस्याध्ययनेनैव स्वसंस्कृते विशुद्धं स्वरूपं वयं जानीमः। भारतीयवाङ्मयस्य श्रेष्ठो ग्रन्थो 'भगवद्गीता' अस्यैव महाभारतस्यैकोंऽशो वरीवर्ति। विष्णुसहस्रनाम-अनुगीता, भीष्मस्तवराज-गजेन्द्रमोक्षसदृशा अनेके भक्तिरसान्विता ग्रन्था अपि महाभारतस्यैव भागाः। इम एव पञ्च ग्रन्थाः 'पञ्चरत्नम्'

१. महत्त्वाद् भारवत्वाच्च महाभारतमुच्यते। आदिपर्व,२।२७४।।
२. महा. आदिपर्व, द्वितीयोऽध्यायः।

इत्यभिधीयन्ते। महाभारतस्योपाख्यानान्यवलम्ब्यैव परवर्तिनः कवयः काव्य-रूपक-गद्य-चम्पू कथा प्रभृतीनि साहित्यानि रचयामासुः। भारतवर्षस्य पुरातन राजनीतिज्ञानाय ग्रन्थोऽयमतीवोपयोगी। आचार-लोकव्यवहारनियमनिरूपणयुताया राजनीतेः प्रतिपादको 'विदुरनीति' संज्ञको ग्रन्थोऽप्यस्यैवांशो विद्यते। इत्थं हि, ऐतिहासिक-धार्मिक-सांस्कृतिक-राजनैतिकदृष्टिभि-र्महाभारतमस्ति गौरवमयं ग्रन्थरत्नम्।

## रचयिता-

आसीद् महाभारतस्य रचयिता वेदव्यासो महाभारतस्य पात्राणां समकालिकः। सत्यवती पराशरावास्तामस्य पितरौ। यमुनाद्वीपे जन्मकारणादयं 'द्वैपायनः', कृष्णवर्णेन 'कृष्णमुनिः' वेदविभागविधानाच्च 'वेदव्यासः' उच्यते। अयं हि धृतराष्ट्र-पाण्डु-विदुराणां नियोगपद्धत्या जनकः पाण्डवानां शुभचिन्तकश्चासीत्। व्यासो हि त्रिभिर्वर्षैः सदोत्थायी भूत्वा महाभारताख्यं ग्रन्थमरचयत्। तथाहि-

**त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः।**
**महाभारतमाख्यानं कृतवानिदमुत्तमम्।। आदिपर्व, ५६. ५२।।**

साम्प्रतं लक्षश्लोकात्मकं महाभारतमुपलभ्यते। अत एवेदं 'शतसहस्रसंहिता' इत्युच्यते। अस्य विकासस्य क्रमशस्त्रीणि स्वरूपाणि मन्यन्ते जय-भारत-महाभारतानि। महाभारतस्य मूलरूपं 'जय' नाम्ना प्रथितमासीत्। पाण्डवविजय-वर्णनेनास्य प्राचीनं नाम जयमिति प्रतीयते। तथाहि 'जयनामेतिहासोऽयम्'। जयस्यैव विकसनं 'भारतम्' उपाख्यानरहितं चतुर्विंशति श्लोकात्मकमासीत्। तथाहि-

**चतुर्विंशति साहस्रीं चक्रे भारतसंहिताम्।**
**उपाख्यानैर्विना तावत् भारतं प्रोच्यते बुधैः।।**
**आदिपर्व, १.१०२-१०३।।**

उपाख्यानयुतं भारतमेव महाभारतरूपेणोपबृंहितं विद्यते। लक्षश्लोकात्मके महाभारते खिलरूपस्य हरिवंशस्यापि श्लोकसंख्या सम्मिलिताऽस्ति। भृगुवंशिभिर्ब्राह्मणैः सम्पादितस्यैवास्य ग्रन्थस्य विपुलो वृद्धिंगतः परिणामः,[1] अध्यात्म-धर्म-नीतिविषयाणां विशदविवेचनमेव पुस्तकमिदं 'विश्वकोषं' चकार।

बाह्याभ्यन्तरप्रमाणैः सत्यमिदं यद् वर्तमानमहाभारतस्य विरचनं गौतमबुद्धात् पूर्वमभूत्।

**आकलनम्**-संस्कृतसाहित्ये व्यासरचितं महाभारतम् 'आर्षकाव्यम्' निगद्यते।

---

१. भण्डारकर रिसर्च इन्स्टीट्यूट पत्रिका भाग-१८, पृ.१७६ तथा च नागरी प्रचारिणी-पत्रिका, भाग-४५, पृ.१०५-१६२

महाभारतरचनाया लक्ष्यं न केवलं युद्धवर्णनमपि तु भौतिक जीवनस्य निःसारतां प्रदर्श्य प्राणिनां मोक्षं प्रत्युन्मुखीकरणं प्रतीयते। अतएव विद्यते महाभारतस्य मुख्यो रसः करुणः, वीरस्तु तस्य अङ्गरस एव। न खलु महाभारतं महाकाव्यम्, प्रत्युत इतिहासः। ग्रन्थेऽस्मिन् अस्माकं देशस्य वीरपुरुषाणां प्रशस्ता पुण्यमयी गाथा निगदिता, अतो ग्रन्थोऽयमितिहास एव। महाभारतस्यांशभूतायां गीतायां कर्मज्ञानभक्तीनां शोभनं सामञ्जस्यमस्य समन्वय-भावनायाः प्रतीकं वर्तते। नानाविधेषु प्रपञ्चेषु अनासक्तः सन् लोकः परमात्मज्ञानस्वरूपं मोक्षं प्राप्नुयादित्येव महाभारतस्य विद्यते मूलशिक्षा।

प्रस्तुतेऽस्मिन्नार्षकाव्यखण्डे रामायण महाभारत सम्बन्धिनः सर्वेऽपि विषया विवेचनपथमानीता मनीषिभिर्लेखकैः। आर्षखण्डस्यास्य सम्पादकः प्रो. भोलाशङ्कर व्यासोऽस्ति हिन्दी-संस्कृत-साहित्ययोर्विश्रुतो विद्वान्। सारस्वतसाधनाकाव्यनिरतस्य प्रो. व्यासमहोदयस्य वैदुष्यं तस्य प्रथितासु कृतिषु चकास्त्येव। डा. व्यासस्य समर्थे सम्पादकत्वे प्रस्तुतखण्डस्य सकुशलं प्रकाशनन्तस्य वैदग्ध्यस्य शोभनमुदाहरणं वर्तते। प्रकाशनकार्यस्यास्य पूर्णतायां सक्रियसहयोगप्रदात्रे प्रो.भोलाशङ्करमहाभागाय हार्दिकं धन्यवादं वितरामि। अस्य खण्डस्य सर्वेऽपि काव्यतत्त्ववेत्तारो लेखकाः साधुवादार्हा, येषां सारगर्भैरालेखै ग्रन्थोऽयं सम्पूर्णो जातः।

संस्कृतसंस्थानस्याध्यक्ष आचार्यो रामनाथ सुमनाः, निदेशिका डॉ. श्रीमती अलका श्रीवास्तवा, सहायक निदेशको डा. चन्द्रकान्त द्विवेदी च धन्यवादार्हा येषां प्रभूतं साहाय्यं सर्वथोपयोगि वर्तते।

प्रस्तुत खण्डस्य सम्पादने प्रकाशने च मम शिष्यस्य झोपनामकस्य डा. रमाकान्तस्य सहयोगोऽतीवोपयोगीति तमपि स्वीयैराशीर्वादैः संयोजयामि।

सुरभारतीवाङ्मस्येदं तृतीयं कुसुमं जनमानसं स्वज्ञानसुरभिणा सुरभितं कुर्यादिति मुहुर्मुहुर्वागदेवीं शारदां प्रार्थयामि।

अवसाने च शिवम् आर्ट मुद्रणालयस्य व्यवस्थापकेभ्यो द्विवेदिबन्धुभ्यो धन्यवादं ददामि, येषां प्रयासेन खण्डोऽयं शीघ्रं प्रकाशितोऽभूत्।। इति शम्।।

बलदेव उपाध्यायः
विद्या विलासः
रवीन्द्रपुरी, वाराणसी।

गुरुपूर्णिमा
वि०सं० २०५६

# भूमिका

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी।।

संस्कृत वाङ्मय में महर्षि वाल्मीकिकृत 'रामायण' आदिकाव्य माना जाता है और वाल्मीकि आदिकवि के रूप में समादृत हैं। 'रामायण' सचमुच एक महान् कवि की महती कृति है, जिसमें एक ओर इसके रचयिता की विलक्षण काव्य-प्रतिभा का समावेश है और दूसरी ओर जिस देश में इसकी रचना हुई, वहाँ के सामाजिक, धार्मिक, सांस्कृतिक, आध्यात्मिक और आदर्श जीवन की समग्रताओं का समवेत समन्वय है। आदिकाव्य 'रामायण' रामचरित पर आधृत, परवर्ती महाकवियों और नाटककारों के महाकाव्यों और नाटकों का उपजीव्य होने के साथ ही भारतीय परिवारों का धर्मग्रन्थ, आर्यों के आचार-विचार, संस्कार-सम्बन्धों, चिरन्तन भक्ति-भावना, मैत्री-भावना और आदर्श उदात्तता का प्रतिनिधि ग्रन्थरत्न है। रामायण के चिरस्थायी अस्तित्व के विषय में महर्षि वाल्मीकि की यह उक्ति सर्वथा सार्थक है-"जब तक पर्वतों और सरिताओं का अस्तित्व इस धरती पर विद्यमान रहेगा, तब तक रामायण की कथा संसार में बनी रहेगी"[1]। जीवन को ओजस्वी तथा उदात्त बनाने के लिये रामायण में जिन आदर्शों को वाल्मीकि ने अमर तूलिका से चित्रित किया, वे भारतवर्ष के लिये ही मान्य और समादरणीय नहीं हैं, प्रत्युत वे मनुष्य मात्र के समक्ष उच्च नैतिक स्तर तथा सामाजिक एवं सांस्कृतिक उदात्त भावना को प्रस्तुत करते हैं। हमारी दृष्टि में 'रामायण' शाश्वतवाद का समुज्ज्वल निदर्शन है, क्योंकि वह मानव जीवन के स्थायी बहुमूल्य तत्त्वों से निर्मित है।

संस्कृत की समालोचक-दृष्टि में रामायण 'सिद्धरस' प्रबन्ध कहा गया है-

सन्ति सिद्धरसप्रख्या ये च रामायणादयः।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी।।[2]

अर्थात् जिसमें रस की भावना नहीं करनी पड़ती, अपितु रस आस्वाद के रूप में ही परिणत हो गया रहता है, वह काव्य 'सिद्धरस' कहलाता है, जैसे रामायण। हमारा हृदय राम-जानकी-कथा से इतना स्निग्ध, रससिक्त और घुलमिल गया है कि हमारे लिये राम और सीता किसी अतीत युग की स्मृति न रहकर वर्तमान युग के जीवन्त प्राणी के रूप में परिणत हो गये हैं। अतएव रामायण को 'सिद्धरस' काव्य कहा गया है। अपनी इसी मौलिक विशेषता के कारण देश-काल की सीमाओं से ऊपर उठकर 'रामायण' आज विश्व-साहित्य

---

१. यावत्स्थास्यन्ति गिरयः सरितश्च महीतले। तावद् रामायणकथा लोकेषु प्रचरिष्यति। बाल का.२.३६
२. आनन्दवर्धन, ध्वन्यालोक पृ. १४८

की महती कृति और आदिकवि वाल्मीकि विश्वकवि के रूप में पूजित हैं।

## उपक्रम-

वाल्मीकि निर्मल प्रतिभा के धनी, दैवी गुणों से विभूषित, आर्षदृष्टि रखने वाले एक महान् कवि थे। कवि के वास्तविक स्वरूप की झलक साहित्यालोचकों को वाल्मीकि के उदाहरण से ही मिली। क्रान्तद्रष्टा कवि की कल्पना में 'दर्शन' के साथ 'वर्णन' का भी मञ्जुल समन्वय रहता है। महर्षि वाल्मीकि को वस्तुओं का निर्मल दर्शन नित्य रूप से था, परन्तु जब तक वर्णन का उदय नहीं हुआ तब तक उनकी कविता प्रकट नहीं हुई। इस सन्दर्भ में प्रसिद्ध आलोचक भट्टतौत का यह कथन सर्वथा सार्थक है-

> **तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।**
> **नोदिता कविता लोके यावज्जाता न वर्णना।।**

संस्कृत की काव्य-धारा रसकूल का आश्रय लेकर प्रवाहित होगी-इसका आभास उसी समय मिल गया जब प्रेम-परायण सहचर के आकस्मिक वियोग से सन्तप्त क्रौञ्ची के करुण क्रन्दन को सुनकर महर्षि के हृदय का शोक श्लोक रूप में छलक पड़ा था-"शोकः श्लोकत्वमागतः"[1]। घटना प्रसिद्ध है कि जब व्याध के बाण से बिंधे हुए क्रौञ्च के लिये बिलखती क्रौञ्ची का करुण निनाद ऋषि ने सुना, तो उनके मुख से सहसा यह श्लोक निकल पड़ा-

> **मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
> **यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।। २.१५**

अर्थात् हे निषाद! तुमने कामविह्वल इस पक्षी को मारा है, अतः तुम सदा के लिये प्रतिष्ठा प्राप्त न करो। महर्षि की इस मङ्गलमयी वाणी को सुनकर स्वयं ब्रह्मा उपस्थित हुए और उन्होंने उनसे रामचरित को लिखने के लिये कहा।[2] रामायण की रचना इसी प्रेरणा की परिणति है। लौकिक संस्कृत में व्यवहृत होने वाले सम अक्षर से युक्त अनुष्टुप् का प्रथम प्रयोग वाल्मीकि ने ही किया, जिसमें लघु-गुरु का निवेश नियमबद्ध था।

रामायण-कथा की एक विलक्षणता यह है कि इसके गायक कोई और नहीं, स्वयं वाल्मीकि शिष्य और राम के पुत्र लव-कुश हैं। इन यमल भाईयों ने राम के समक्ष सम्पूर्ण रामायण का मधुर स्वरों में गायन किया था। वाल्मीकि राम के समकालिक थे। उन्हें

---

१. काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा। क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। **ध्वन्यालोक** १.५ तुलनीय, निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः। **रघुवंश** १४. ७०

२. बालकाण्ड-२. २३, ३२

दिव्य-दृष्टि प्राप्त थी। उसी दिव्य दृष्टि से उन्होंने राम के अतीत-वर्तमान और अनागत चरित का अवलोकन करके उसे काव्यबद्ध किया था। इसीलिये आदिकवि ने राम के समग्र चरित के यथार्थ एवं आदर्श पक्ष का आकलन किया था। है कोई ऐसी अद्‌भुत घटना का उदाहरण विश्व के किसी साहित्य में ? उत्तर नकारात्मक ही होगा।

आदिकाव्य रामायण को 'चतुर्विंशतिसाहस्रीसंहिता' कहते हैं, अर्थात् इसमें २४ हजार श्लोक हैं-ठीक उतने ही हजार जितने गायत्री के अक्षर हैं। प्रत्येक हजार श्लोक का प्रथम अक्षर गायत्री मन्त्र के ही अक्षर से क्रमशः आरम्भ होता है, ऐसी विद्वज्जनों की मान्यता है। रामायण में पाठ-भेद भी बहुत है। उत्तरी भारत, बंगाल, कश्मीर तथा दक्षिण भारत से रामायण के जो संस्करण उपलब्ध हैं उनमें पर्याप्त पाठभेद है। बाह्य तथा आन्तरिक प्रमाणों के साक्ष्य के आधार पर रामायण का रचनाकाल बुद्ध से पूर्व माना जाता है। निष्कर्षतः रामायण का निर्माण ५०० ई. पूर्व से पहले मानना युक्तिसंगत है।

## चरित्राङ्कन

आदिकवि वाल्मीकि ने अपने काव्य-मन्दिर की पीठ पर प्रतिष्ठित किया है- मर्यादा पुरुषोत्तम रामचन्द्र को। विभिन्न सम-विषम परिस्थितियों के बीच रहकर व्यक्ति अपने शील के सौन्दर्य की धीरतापूर्वक किस प्रकार रक्षा कर सकता है, इसकी सीख हमें वाल्मीकि ने ही दी है। आदिकवि ने राम के चरित्र को समस्त आदर्शों के पुञ्जीभूत विग्रह के रूप में प्रस्तुत किया है। चरित नायक राम शोभन गुणों के पुञ्ज हैं। राम की उदात्तता स्पृहणीय है। वे कृतज्ञता की मूर्ति हैं। किसी प्रकार के किये गये एक भी उपकार से संतुष्ट हो जाते हैं, किन्तु सैकड़ों अपकारों को भूल जाते है-

**कथञ्चिदुपकारेण कृतेनैकेन तुष्यति।**
**न स्मरत्यपकाराणां शतमप्यात्मवत्तया।। २.१.११**

राम के उदार हृदय की पूर्ण झलक उनके एक वाक्य से मिलती जिसे उन्होंने सीता की सुधि लाने वाले उपकारी हनुमान् से कहा था-

**मय्येव जीर्णतां यातु यत् त्वयोपकृतं हरे।**
**नरः प्रत्युपकारार्थी विपत्तिमभिकांक्षति।।७.४०.२४।।**

राम, हनुमान् पर विपत्ति आये और हम उनका उपकार करें, यह सोच भी नहीं सकते। राम की हार्दिक उदारता का यह उदाहरण कितना मार्मिक है? उदारता की दूसरी कड़ी का उदाहरण रावण-वध के बाद विभीषण के प्रति राम की निम्न उक्ति में मिलता है-

**मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम्।**
**क्रियतामस्य संस्कारो ममाप्येष यथा तव।।६.१०६.२५।।**

मृत्यु ही शत्रुता की समाप्ति है। रावण के मरने के बाद हमारा अभीष्ट सिद्ध हो गया। अब इसका उचित संस्कार करो। जैसे यह तुम्हारा है, वैसे ही मेरा भी, शत्रु के प्रति इतनी उदार भावना रखना युद्ध के इतिहास में अपूर्व घटना है।

राम की धीरता विलक्षण है। विपत्ति के उत्ताल तरङ्गों को सहते हुये भी हिमालय की भाँति अचल राम के हृदय में विकार उत्पन्न नहीं होता। राज्य से वञ्चित राम के मुख पर वन जाते हुए, विषाद की कोई रेखा नहीं उभरती-

**न वनं गन्तु कामस्य त्यजतश्च वसुन्धराम्।**
**सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया।२.१९.३३।**

यह मानव जीवन राम-दर्शन के बिना निरर्थक है-

**यश्च रामं न पश्येत्तु यं च रामो न पश्यति।**
**निन्दितः सर्वलोकेषु स्वात्माप्येवं विगर्हते।२.१७.१४।**

यही राम की सर्वलोकहितभावना और सर्वलोकप्रियता का रहस्य है। राम तो धर्म के साक्षात् रूप हैं-"रामो विग्रहवान् धर्मः"। सीता का चरित्र भारतीय नारी के महान् आदर्श का प्रतीक है। रावण के बार-बार याचना करने पर भी सीता का रावण के प्रति तिरस्कार-पूर्ण वचन भारतीय पतिव्रता ललना का गौरवगान करता रहेगा-

**चरणेनापि सव्येन न स्पृशेयं निशाचरम्।**
**रावणं किं पुनरहं कामयेयं विगर्हितम्।५.२६.१०।।**

अर्थात् इस निशाचर रावण से प्रेम करने की बात तो दूर रही, मैं तो इसे अपने बायें पैर से भी नहीं छू सकती।

रावण-विजय के अनन्तर राम सीताचरित्र की शुद्धता पर सन्देह करते हुए जन सामान्य के सामने अनेक कटुवचन कहे। उन वचनों के उत्तर में सीता ने राम से जो कहा, वह अत्यन्त ही मर्मस्पर्शी है। हे नरश्रेष्ठ! आपने मेरे चरित्र पर, क्रोधावेश में नारी के दुर्बल पक्ष स्त्रीत्व को आगे करके लाँछन लगाया है। आपने मेरे प्रबल पक्ष पत्नीत्व तथा पातिव्रत को पीछे ढकेल दिया है-

**त्वया तु नरशार्दूल क्रोधमेवानुवर्तता।**
**लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम्।।**
**न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः।**
**मम भक्तिश्च शीलञ्च सर्वं ते पृष्ठतः कृतम्। ६.११६.१४,१६।।**

और सीता ने अपने चरित्र की शुद्धता अग्निपरीक्षा देकर सिद्ध कर दी। सीता की यह साहसिक अग्निपरीक्षा पतिव्रता नारी-समाज की सम्मान रक्षा का अप्रतिम उदाहरण है।

पत्नी की महत्ता पति के सुख-दुःख में साथ देने में है। रामवन-गमन में सीता का, वन में साथ चलने का युक्तिपूर्ण आग्रह उनकी पतिपरायता का ज्वलन्त उदाहरण है। अन्त में राम ने पुनः वाल्मीकि के समक्ष जब सीता से अपनी शुद्धता को प्रमाणित करने को कहा, तो इस बार पतिव्रता सीता ने शपथ-पूर्वक रसातल-गमन का निश्चय किया और यह कहती हुई कि यदि मैं मन, वाणी और कर्म से केवल श्रीराम की ही आराधना करती हूँ तो भगवती पृथिवी अपनी गोद में स्थान दें, वह धरती में समा गई। सीता के इस रसातल-प्रवेश में, उनकी अन्तर्वेदना की मूक कथा किस सहृदय को समुद्वेलित नहीं करती?

राम-सीता का निर्मल भव्य चरित्र वाल्मीकि की कोमल, किन्तु सशक्त काव्य-प्रतिभा का शोभन निदर्शन है। महर्षि वाल्मीकि की दृष्टि में चरित्र ही मानवता की सच्ची कसौटी है। राम और सीता का प्रशस्त चरित्र ही आर्य चरित्र का आदर्श है और वह मानवता की चरम अभिव्यक्ति है। सत्यप्रतिज्ञ दशरथ, भ्रातृ भगति के प्रतीक भरत, सेवापरायण लक्ष्मण, सच्चा मित्र सुग्रीव और अनन्य सेवक हनुमान् का चरित भी रामायण का विशेष अवदान है।

## महाभारत-

महर्षि वेदव्यास रचित 'महाभारत' आर्य संस्कृति तथा भारतीय सनातन धर्म का एक महान् ग्रन्थ तथा अमूल्य रत्नों का विपुल भण्डार है। भगवान् व्यास ने महाभारत में वर्णित विषय का उल्लेख करते हुए स्वयं कहा है-''इस महाभारत में मैंने वेदों के रहस्य और विस्तार, उपनिषदों के सम्पूर्ण सार, इतिहास-पुराणों के उन्मेष और निमेष, चातुर्वर्ण्य के विधान, पुराणों के आशय, ग्रह-नक्षत्रों के परिमाण, न्याय, शिक्षा, चिकित्सा, दान, पाशुपत, तीर्थों, पुण्य देशों, नदियों, पर्वतों, वनों और समुद्रों का भी वर्णन किया है''[1] वस्तुतः महाभारत गूढार्थयुक्त ज्ञान-विज्ञान शास्त्र है, राजनीतिक दर्शन है, कर्मयोग तथा भक्तिशास्त्र है, अध्यात्मविद्या है, आर्यजाति का इतिहास है और सर्वार्थसाधक तथा सर्वशास्त्रसंग्रह है। ऋषियों ने इतिहास-पुराण को पञ्चम वेद की संज्ञा देकर महाभारत की महत्ता स्वीकार की है। महाभारत एक ऐसा महासागर है, जिसमें असंख्य ज्ञान सरितायें मिलकर ऐसी एकप्राण हो चुकी हैं जिससे यह सिद्ध होता है कि जो कुछ इसमें नहीं है, वह इस पृथिवी पर कहीं भी नहीं है-"यन्नेहास्ति न तत् क्वचित्"। 'महाभारत' भारतवर्ष की समुज्ज्वल ज्ञान-परम्परा का एकमात्र अमर स्मारक है। इसीलिए महत्ता, भार अथवा गम्भीरता की विशेषता से ही इसको 'महाभारत' कहते हैं।[2] महाभारत के माहात्म्य के विषय में महर्षि व्यास ने स्पष्ट कहा है-

---

१. महाभारत, आदिपर्व ।।अनुक्रमणिका।।१.६२-७०
२. महत्त्वाद् भारवत्वात् च महाभारतमुच्यते।। आदिपर्व २.२७४

यो विद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः।।

अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत्।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना।। महा.आ.प.२ अध्याय।।

अर्थात् इस आख्यान को बिना जाने हुए जो पुरुष वेदाङ्ग तथा उपनिषदों को भले जाने, वह कभी विचक्षण नहीं कहा जा सकता; क्योंकि यह महाभारत एक साथ ही अर्थशास्त्र, धर्मशास्त्र और कामशास्त्र है। व्यास ने स्वयं महाभारत को समस्त कविजनों के लिये उपजीव्य कहा है। इस ग्रन्थ के अभ्यास से कवियों की बुद्धि में स्फूर्ति उत्पन्न होती है-

इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः।
इदं कविवरैः सर्वैराख्यानमुपजीव्यते।।

महाभारत का सांस्कृतिक मूल्य भी महत्त्वपूर्ण है। हम इस ग्रन्थ के अध्ययन से ही अपनी संस्कृति के विशुद्ध स्वरूप से परिचित हो सकते हैं। भारतीय वाङ्मय का सर्वश्रेष्ठ ग्रन्थ 'भगवद्गीता' इस महाभारत का एक अंश है। इसके अतिरिक्त 'विष्णुसहस्रनाम' 'अनुगीता', 'भीष्मस्तवराज', 'गजेन्द्र-मोक्ष' जैसे आध्यात्मिक तथा भक्तिपूर्ण ग्रन्थ इसी के अंश हैं। इन्हीं पाँच ग्रन्थों को 'पञ्चरत्न' कहा जाता है।

'महाभारत' के उपाख्यानों का अवलम्बन करके परवर्ती संस्कृत कवियों ने काव्य, नाटक, गद्य, चम्पू, कथा, आख्यायिका आदि नाना प्रकार के साहित्य की रचना की है। हिन्दी में भी राष्ट्रकवि मैथिलीशरण गुप्त और रामधारी सिंह दिनकर ने क्रमशः 'द्वापर', 'कुरुक्षेत्र', 'रश्मिरथी' आदि काव्यग्रन्थों की रचना महाभारत की कथा को ही आधार मानकर की है। भारत की प्राचीन राजनीति के ज्ञान के लिये यह ग्रन्थ अत्यन्त उपयोगी है। विदुरनीति, जिसमें आचार तथा लोकव्यवहार के नियमों का शोभन निरूपण है, महाभारत का ही एक अंश है। इस प्रकार ऐतिहासिक, धार्मिक, सांस्कृतिक, राजनीतिक आदि दृष्टियों से महाभारत एक गौरवपूर्ण ग्रन्थरत्न है।

**रचयिता**-महाभारत के रचयिता वेदव्यास महाभारत के पात्रों के समकालिक थे। इनका उन पात्रों के साथ घनिष्ठ सम्बन्ध था। इनकी माता का नाम सत्यवती था और पिता पराशर मुनि थे। सत्यवती चेदिराज वसु उपरिचर के वीर्य से यमुना के किसी द्वीप में उत्पन्न हुई थी। यमुना-द्वीप में जन्म लेने के कारण व्यास जी 'द्वैपायन', शरीर के रङ्ग के कारण 'कृष्णमुनि' तथा यज्ञीय उपयोग के लिये वेद को चार भागों में विभक्त करने के कारण 'वेदव्यास' कहे जाते हैं। ये धृतराष्ट्र, पाण्डु तथा विदुर के नियोगपद्धति से जन्मदाता और पाण्डवों के शुभचिन्तक थे। इन्होंने तीन वर्षों तक सतत परिश्रम से सदा उत्थान से इस

अनुपम ग्रन्थ की रचना की-

त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः।
महाभारतमाख्यानं कृतवानिदमुत्तमम्।।आदिपर्व, ५६. ५२।।

**कलेवर**-आजकल महाभारत में एक लाख श्लोक उपलब्ध हैं। इसलिये इसे 'शतसाहस्र-संहिता' कहते हैं। इसके विकास में तीन क्रमिक स्वरूप माने जाते हैं-१.जय, २.भारत, ३.महाभारत,। इस ग्रन्थ का मूलरूप 'जय' नाम से प्रसिद्ध था। पाण्डवों के विजय-वर्णन के कारण इसका प्राचीन नाम जय था-"जयनामेतिहासोऽयम्"। जय के अनन्तर विकसित होने पर इसका नाम पड़ा 'भारत'। उस समय इसका परिमाण केवल चौबीस हजार श्लोक था और यह आख्यानों से रहित था।[1] लगभग पाँच सौ वर्ष ई. पूर्व विरचित आश्वलायन ग्रह्यसूत्र में 'भारत' के साथ 'महाभारत' का नाम निर्दिष्ट है। 'भारत' के वर्तमान रूप में परिबृंहण का कार्य उपाख्यानों के जोड़ने से ही निष्पन्न हुआ है। इन उपाख्यानों में कुछ तो प्राचीन ऋषि तथा राजाओं के जीवन से सम्बद्ध होने से घटना प्रधान हैं। कुछ ऐतिहासिक तथा कुछ लोककथा के ही साहित्यिक संस्करण हैं। अध्यात्म, धर्म तथा नीति की विशद विवेचना ने इस ग्रन्थ को भारतीय धर्म तथा संस्कृति का विशाल 'विश्वकोष' बना दिया है। डॉ. सुक्थणकर का मत है[2] कि भृगुवंशी ब्राह्मणों के द्वारा किये गये सम्पादनों का ही परिणाम महाभारत का वर्तमान वृद्धिंगत रूप है। आजकल उपलब्ध महाभारत की श्लोक संख्या एक लाख है। इसमें हरिवंश की श्लोक संख्या भी सम्मिलित है क्योंकि परिशिष्ट होने से हरिवंश भी महाभारत का अविभाज्य अङ्ग माना गया है।

अन्तः बाह्य प्रमाणों के साक्ष्य पर यह निर्विवाद सत्य है कि वर्तमान महाभारत का निर्माण गौतम बुद्ध के पूर्व युग से सम्बद्ध है। ईस्वी पूर्व पञ्चम या षष्ठ शती में उसकी रचना हुई।

महाभारत के खण्डों को पर्व कहते हैं। पर्वों की संख्या १८ है-१.आदि, २.सभा, ३.वन, ४.विराट, ५.उद्योग, ६.भीष्म, ७.द्रोण, ८.कर्ण, ९.शल्य, १०.सौप्तिक, ११.स्त्री, १२.शान्ति, १३.अनुशासन, १४.अश्वमेध, १५.आश्रमवासी, १६.मौसल, १७.महाप्रस्थानिक, १८.स्वर्गारोहण। महाभारत के इन अठारह पर्वों में चन्द्रवंश का इतिहास, कौरववंश, पाण्डवों की उत्पत्ति, उनका परस्पर युद्ध, कौरव-पराजय, पाण्डव-विजय, भीष्म द्वारा युधिष्ठिर को राजधर्म तथा मोक्षधर्म का उपदेश, युधिष्ठिर का अश्वमेधयज्ञ, धृतराष्ट्र का

---

१. चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम्। उपाख्यानैर्विना तावत् भारतं प्रोच्यते बुधैः।। आदिपर्व.१। १०२-१०३।।

२. भण्डारकर रिसर्च इन्सटीच्यूट की पत्रिका, भाग १८, पृ. १७६ तथा नागरी प्रचारिणी पत्रिका, भाग ४५, पृ. १०५-१६२

वानप्रस्थ, यादववंशविनाश, पाण्डवों की हिमालय-यात्रा तथा स्वर्गारोहण मुख्यतया वर्णित है। इनके अतिरिक्त महाभारत में अनेक रोचक तथा शिक्षाप्रद उपाख्यान भी हैं, जिनमें शकुन्तलोपाख्यान, मत्स्योपाख्यान, रामोपाख्यान, शिवि उपाख्यान, सावित्री उपाख्यान तथा नलोपाख्यान विशेष प्रसिद्ध हैं।

आकलन-संस्कृत साहित्य में वाल्मीकि और व्यासरचित काव्य 'आर्षकाव्य' के नाम से विख्यात हैं। व्यास की महाभारत-रचना का उद्देश्य केवल युद्धों का वर्णन नहीं है, प्रत्युत इस भौतिक जीवन की असारता दिखलाकर प्राणियों को मोक्ष की ओर उन्मुख करना है। अतएव महाभारत का मुख्य रस शान्त है, वीर तो उसका अङ्गरस है। महाभारत महाकाव्य न होकर इतिहास है, क्योंकि वह हमारे देश के प्रशस्त वीरों की पुण्यमयी गाथा है। यह वह धार्मिक ग्रन्थ है जिसमें प्रत्येक श्रेणी का मनुष्य अपने जीवन को सुधारने की सामग्री प्राप्त करता है। राजनीति का तो यह सर्वस्व ही है। राजा और प्रजा के पृथक्-पृथक् अधिकारों और कर्तव्यों का उपयुक्त वर्णन इसकी महती विशेषता है। महाभारत की अंशभूत 'भगवद्गीता' में कर्म, ज्ञान और भक्ति का मञ्जुल सामञ्जस्य इसकी समन्वय भावना का प्रतीक है। नानाविध विकट प्रपञ्चों में लिप्त न होकर मानव आत्मज्ञानरूप मोक्ष प्राप्त करे, महाभारत की यही शिक्षा है।

संस्कृत वाङ्मय-इतिहास के इस तृतीय आर्षकाव्य-खण्ड में कुल २७ अध्याय हैं, जिनमें रामायण एवं महाभारत के विविध विषयों का साङ्गोपाङ्ग विवेचन किया गया है। रामायण विवेचन क्रम में, रामायण का स्वरूप, उसका काव्य-सौन्दर्य, उसमें वर्णित समाज, धर्म, संस्कृति, राजनीति तथा युद्ध प्रणाली का सविस्तर प्रामाणिक विवरण है। इसके साथ ही जैन परम्परा में रामायण-कथा आधुनिक भाषा-रामायणों पर रामायण का प्रभाव, रामकथा पर आधृत संस्कृत साहित्य, महाभारत, पुराण साहित्य और अन्य संस्कृत रामायणों में रामकथा, लोक-साहित्य एवं लोकपरम्परा में रामायण तथा वाल्मीकि रामायण का विदेशी रामकथा पर प्रभाव इन विषयों का भी सशक्त वर्णन महत्त्वपूर्ण है।

महाभारत वर्णन-प्रसङ्ग में, महाभारत का परिचय, भगवद्गीता, अनुगीताएँ, महाभारत पर आधृत संस्कृत साहित्य, महाभारत में काव्य-सौन्दर्य, महाभारत में वर्णित धर्म, संस्कृति, समाज, राजनीति, युद्धनीति, महाभारत सम्बद्ध जैन कथा-साहित्य, आधुनिक भारतीय भाषाओं में महाभारत से सम्बद्ध साहित्य, लोक-साहित्य तथा परम्परा में महाभारत और विदेशों में महाभारत इन विषयों का सारगर्भ विवेचन महाभारत के समग्र स्वरूप को उद्घाटित करता है। संस्कृत साहित्य के उपर्युक्त दोनों महनीय आर्षग्रन्थ परवर्ती संस्कृत एवं संस्कृतेतर साहित्य-रचना के उपजीव्य के रूप में सदा अमर रहेंगे।

इस 'आर्षकाव्य-खण्ड' के सम्पादक प्रो. भोलाशंकर व्यास संस्कृत एवं हिन्दी साहित्य के उद्भट विद्वान् हैं। वे काशी हिन्दू विश्वविद्यालय के हिन्दी विभाग में अध्यक्ष पद को सुशोभित कर चुके हैं। डॉ. व्यास साहित्यशास्त्रमर्मज्ञ, समालोचक और समर्थ लेखक हैं। ऐसे मनीषी सम्पादक के सम्पादकत्व में इस खण्ड का प्रकाशन विशेष महत्त्व रखता है। मैं

प्रो. व्यास का हृदय से आभारी हूँ- जिनका वैदुष्यपूर्ण सम्पादन-कार्य इस खण्ड की पूर्णता में विशेष उपादेय है।

प्रस्तुत खण्ड के लेखक-प्रो.भोलाशङ्कर व्यास, डॉ. रामकरण शर्मा, डॉ. कृष्णदेव उपाध्याय, डॉ. जगन्नाथ पाठक, डॉ. राजाराम जैन, डॉ. प्रभुनाथ द्विवेदी, डॉ.रमानाथ त्रिपाठी, डॉ. रमाकान्त झा, डॉ. बृजेश कुमार शुक्ल तथा डॉ. प्रीतिप्रभा गोयल काव्यशास्त्र के मर्मज्ञ विद्वान् हैं। उन सबों के वैदुष्यपूर्ण सारगर्भ आलेखों से यह आर्षखण्ड महनीय हो सका है, अतः उनके इस प्रशंसनीय कार्य के लिये उन्हें साधुवाद देता हूँ।

उत्तर प्रदेश संस्कृत संस्थान के अध्यक्ष आचार्य रामनाथ सुमनाः, निदेशक डॉ. श्रीमती अलका श्रीवास्तवा तथा सहायक निदेशक डॉ. चन्द्रकान्त द्विवेदी के अथक प्रयास से यह आर्षकाव्य-खण्ड प्रकाशित हो सका है, अत एव उन्हें हार्दिक धन्यवाद देता हूँ। इस सन्दर्भ में भाषा विभाग, उत्तर प्रदेश शासन के अधिकारियों तथा संस्कृत संस्थान की कार्यकारिणी समिति के सदस्यों का अमूल्य सहयोग श्लाघनीय है, जिनके निरन्तर उत्साह-वर्धन से संस्कृत वाङ्मय के इतिहास का प्रकाशन कार्य चल रहा है।

प्रस्तुत आर्षकाव्य-खण्ड के सम्पादन में मेरे प्रिय शिष्य डॉ. रमाकान्त झा का सश्रम सहयोग रहा है, अतः मैं डॉ. झा को हृदय से आशीर्वाद देता हूँ और उनके दीर्घायुष्य की कामना करता हूँ।

अन्त में मैं शिवम् आर्ट के व्यवस्थापक द्विवेदी बन्धुओं के प्रति भी शुभ कामना व्यक्त करता हूँ, जिनके सक्रिय सहयोग से यह खण्ड यथासमय प्रकाशित हो सका है। इति शम्।

गुरुपूर्णिमा
वि.सं. २०५६

**बलदेव उपाध्याय**
विद्या विलास
रवीन्द्रपुरी, वाराणसी

# भूमिका

सावित्रीव रुचिस्तथा हुतवहज्वालेव यज्ञारणौ,
दिव्या वागिह मन्त्रदैवतमयी प्रादुर्बभूव स्वयम्।।
आद्यानां किल चक्षुषोर्विवृणुते ज्योतिः कवीनां परं,
सेयं वैदिकभारती विजयते सद्भारते भारते।। (१)

या सा हैमवती दिवोथ दुहिता सूर्यप्रियोषा यथा,
देवेभ्यः प्रकटीचकार निखिलं दिव्यं रहस्यं पुरा।
सुव्यक्तोपनिषत्सु या मधुमयी विद्येव विद्योतते,
शब्दब्रह्ममयी परा भगवती जेजीयते भारती।। (२)

रसेन करुणेन या विगलिता स्वयं निर्झर-,
स्तुतिप्रसरनिर्भरा ननु महाकवेरादिमात्।।
महीधरनिभादसौ जयति रावणारेर्गुण-
प्रकर्षकलझाङ्कृतैर्जगति संस्कृता भारती।। (३)

यस्यां योगेश्वरवरमुखाच्छ्रूयते शङ्खशब्दो,
गाण्डीवज्याध्वनिरपि रणत्किङ्किणीकोरणेषु।।
धर्मे स्वे स्वे विहितमनसां कर्मणां चोपदेशै-
र्व्यासस्येयं भुवि विजयतां भारती भारतीया।। (४)

(सम्पादकस्य)

भारतीयवाङ्मये महर्षिवाल्मीकिविरचितं रामायणं महर्षेः कृष्णद्वैपायनस्य महाभारतंचेत्यार्षमहाकाव्यद्वयं वैदिकवाङ्मयानन्तरं महत् पदं वैशिष्ट्यं चाधत्ते। भारतीयसंस्कृतेर्विकासयात्रायां वैदिकसंस्कृतेरनन्तरं यः पश्चाद्भावी परिवर्तनक्रमो जातस्तस्य विवरणमत्रार्षमहाकाव्यद्वये सुस्पष्टतया दरीदृश्यते। अनयोर्महाकाव्ययोः पर्यालोचनेनेदं सम्यग्विज्ञातं भवति यदेतयोः सामाजिकी व्यवस्था, मानवीयाचारव्यहारप्रक्रिया, चिन्तनपद्धतिश्च वैदिकवाङ्मये समुपलब्धायाः स्थितेः कामपि विशिष्टां परिवर्तितां प्रकृतिं स्फुटीकुर्वन्ति। आर्षमहाकाव्ययुगे वैदिकः समाजो ग्रामसभ्यतामाश्रमव्यवस्थां, तपोवनस्थितिं, पशुपालनसंस्कृतिं च शनैश्शनैर्विहाय विकसनप्रक्रियामनुसरन्नभिलक्ष्यते। वैदिकयुगीना आर्याः पशुपालनपरामार्थिकीं स्थितिं हित्वा निरन्तरं कृषिपरामार्थिकीं वृत्तिं समवलम्बमाना दृश्यन्ते। मूलतो ग्रामसभ्यता क्रमशो नागरिकसभ्यतायां परिवर्तमाना समुपलभ्यते। आर्यजनानां राजनीतिकव्यवस्थापि गणशासनप्रक्रियां त्यजन्ती राजतन्त्रात्मिकां शनैश्शनैरवलम्बते स्म। दासवर्णै रार्येतरजनैर्योयुध्यमाना आर्यजनास्तत्तदार्यगणस्य प्रभुत्वस्थापनायाधुना परस्परमपि विग्रहं युद्धं च विदधतो दरीदृश्यन्ते।

वैदिकयुगीनाया गणतन्त्रात्मकशासनव्यवस्थायाः स्थाने वंशानुगता राजतन्त्रव्यवस्था महाकाव्यद्वयेऽत्र बद्धमूला परिलक्ष्यते।

भारतीयवाङ्मयेऽपि भाषिकी निरन्तरं परिवर्तनशीला दृश्यते। नव्यपरिस्थित्यनुसार-मार्यजनानां भावसन्ततिं चिन्तनप्रक्रियांचाभिव्यंजयितुं वैदिकमन्त्रेष्वपि ऋचां स्थाने यजुषां प्रयोग एधमानो दरीदृश्यते। ब्राह्मणग्रन्थेषूपनिषत्सु च प्रवृत्तिरेषा प्रकृष्टं गद्यस्वरूपमलभत। वैदिकच्छन्दसामपि संरचनोपनिषदां छन्दस्सु ब्राह्मणग्रन्थेषूपलभ्यमानासु गाथासु च किंचित्परिवर्तिता परिलक्ष्यते।

आर्यजनानां सामाजिकीं, धार्मिकीं, नैतिकींच व्यवस्थां दृढ़ीकर्तुं जीवनपद्धतिं च नियन्त्रयितुमपि प्रयासा विधीयन्ते स्म। तत्सम्बन्धिनो दिङ्निर्देशांश्च प्रतिष्ठापयितुं श्रौतसूत्र-धर्मसूत्र-गृह्यसूत्र- शुल्बसूत्रेति कल्पसूत्राणां संहितोत्तरवैदिकयुगे ऋषिभिः प्रणयनं विहितं परिदृश्यते। प्रारम्भिकेषु वैदिकसूक्तेषु परिलक्ष्यमाणार्यर्षीणां बहुदेवमयी दार्शनिकी विचारधारा ऋक्संहितायामेव दशममण्डले कतिपयेषु सूक्तेषु सर्वासां प्राकृतिकशक्तिमयीनां देवतानां नियन्त्रकं किमपि तत्त्वं गवेषयन्ती समभिलक्ष्यते। पुनश्च, तत्रैव जागतीयं रचना कथं सम्बभूव, सृष्टेरादौ किमासीदित्यादिविषयकं चिन्तनमपि वैदिकमन्त्रद्रष्टॄणां प्रतिभायां परिस्फुरितमासीदिति नासदीयसूक्तं प्रमाणयति। जीवात्मनो, भौतिकस्य जगतः परमात्मनश्च विषये सूक्ष्मातिसूक्ष्मं विवेचनं विश्लेषणं चापि संहितोत्तरवैदिकयुगे विधीयते स्म, एतद्विषये नैका उपनिषदः प्रमाणम्। याज्ञिककर्मकाण्ड- प्रक्रियाणामपि कथं सुविधि विनियोगः स्यादेतावता तत्तद्वैदिकशाखानुयायिनां कृते संहितोत्तरवैदिकयुगे ऋषिभिर्ब्राह्मणग्रन्थानामपि रचना व्यधायि, येषां गणनाऽपि वेदशब्दस्यार्थप्रतिपत्तौ संगृह्यते - "मन्त्रब्राह्मणयोर्वेदनामधेय" मिति। इदमनुमीयते, यदार्यजनानां समाजः संस्कृतिश्च, भाषिकी संरचना, वाङ्मयंच विक्रमात् दशशताब्दपूर्वमेव स्थिरीभवितुं निश्चितं स्वरूपं च प्रतिष्ठापयितुं प्रयतमानानि परिलक्ष्यते।

आर्यजनानां वाग्व्यापारमपि सुपरिष्कृतं विधातुं वैदिकमन्त्राणां शुद्धोच्चारणे साधुशब्दप्रयोगे चावहितमनोभिस्तत्तच्छाखानुयायिभिर्ऋषिभिः प्रातिशाख्यानां निबन्धनं विधाय भाषिकसंरचनाया विश्लेषणविधौ प्रयतमानैर्न केवलं भारतेतिहासेऽपि तु विश्वस्मिन् विश्वेतिहासे सर्वप्रथमं व्याकरणशास्त्रविषयकोऽध्ययनविधिः समुन्मीलितः। वैदिकच्छन्दसामपि सम्यक् विश्लेषणं कृत्वा छन्दःशास्त्रस्यापि सूत्रपातो विहितो यत्खलु शौनकीयऋक्प्रातिशाख्यानुशीलनेन सुविज्ञातं भवति।

आर्यजनानां पुरावृत्तमितिहासश्च कथं सुरक्षिते भवेतामिति हेतोर्ब्राह्मणग्रन्थेषु पुराणस्येतिहासस्याख्यानानां, नाराशंसिनीनां गाथानां च सङ्ग्रहोऽपि विहितः। राज्ञामृषीणां च वंशानुचरितं, युद्धानां सामाजिकविकासप्रक्रियया सह सम्बद्धानामन्यासां घटनानां च मौखिक्या परम्परयानुवंशिकपद्धत्या च संरक्षणं विधातुं पौराणिकानां सूतानां विशिष्टो वर्गः समुद्भूत आसीत्। आर्षमहाकाव्यद्वयस्य रचनाकालं यावद् भारतीयायां संस्कृतौ, सामाजिक्यां व्यवस्थायां, चिन्तनपद्धत्यां, भाषिकसङ्घटनायां, भारतीयवाङ्मये च निरन्तरं विकसनशीलेयं परिवर्तनप्रक्रिया आर्षमहाकाव्ययुगे निश्चितं स्वरूपं लब्धवतीत्यस्माकं विचारसरणिः। वयमत्र भारतीयवाङ्मयविषये किंचिद्विस्तरेण विचारयितुमभिलषामः।

ऋग्वेदमन्त्राणां वैदिकी वाग्यजुः संहितायामथर्वसंहितायां, ब्राह्मणारण्यकसाहित्ये, उपनिषत्सु कल्पसूत्रेषु च परिवर्तनक्रमं लभमानार्षमहाकाव्यद्वये विशिष्टं स्वरूपं प्राप्तवती। षण्णवत्युत्तरनवशताधिकत्रिसहस्रपरिमितैरष्टाध्यायीसूत्रैर्महर्षिणा दाक्षीपुत्रेण सर्वप्रथमं लौकिकी गीर्वाणवाणी संस्कृता परिमार्जिता च विहिता। यद्यपि लौकिक्या वाचो व्याकृतिं विदधता मुनिना पाणिनिनैव लौकिकभाषायाः संस्करणे सर्वमान्यः प्रयासः कृतः, तथापि तेन ये भाषिकप्रयोगाः स्वीकृतास्तेषां स्वरूपं पाणिनेः प्राग्वर्तिनि संहितोत्तरवैदिकवाङ्मय एव विकसितं दृश्यते। लोकभाषायाः परिनिष्ठितं स्वरूपं कठ-केन-मुण्डक-माण्डूक्य-श्वेताश्वरोपनिषत्सु समेधमानं समुपलभ्यते। यद्यप्यत्र प्राचीना आर्षा भाषिकप्रयोगा अपीतस्ततः प्रयुज्यमाना परिदृश्यन्ते। नैकेषां श्रौत-सूत्राणां, धर्मसूत्राणां, गृह्यसूत्राणामपि गद्येऽधिकाधिकं पाणिनिसम्मतस्य लौकिकस्य भाषिकस्वरूपस्य प्राग्भाविता दरीदृश्यते। किन्त्वत्रापि पाणिनिव्याकरणानुसारमपाणिनीयान्यार्षपदानि दृग्गोचरीभवन्ति। यथा सप्तदशानि, प्रस्कन्दयित्वा, दर्पति, लुनोति, येषां पाणिनीयव्याकरणसम्मताः यथाक्रमं सप्तदश, प्रस्कन्द्य, दृप्यति, लुनाति इति साधुप्रयोगा भवन्ति। तत्तद्धातुरूपाणां परस्मैपदात्मनेपदयोर्निश्चितव्यवस्था, भ्वादिगणानुसारं धातोः कृते निर्धारितस्य विकरणस्य प्रयोगस्तदनुकूला रूपरचना च, अनुपसर्गधातोः पूर्वकालिककृदन्तरूपे क्त्वाप्रत्ययस्य विधानं, किन्तु सोपसर्गधातुना सह क्त्वाप्रत्ययस्य स्थाने ल्यबादेशः, पद्यरचनायां पदेषु नियतं सन्धिव्यवस्थेत्यादि नियमानां शास्त्रीयसंस्कृतभाषायाः प्रयोगे पालनमत्र समुल्लङ्घितमपि परिलक्ष्यते। इयमार्षपदप्रयोगपरम्परा रामायणमहाभारतयोर्भाषिकसंरचनायामपीतस्ततो दरीदृश्यते, यत्र कानिचिदपाणिनिसम्मतानि पदानि प्रयुक्तानि सन्ति, यानि खलु पाणिनेः प्राग्भावि लौकिकभाषास्वरूपं विवृण्वते। तथापीदं प्रमाणयितुं शक्यं यद्रामायणरचनाकाले शिष्टप्रयोगवती व्याकरणसम्मता लौकिकी भाषा विकसिताऽऽसीत्। किष्किन्धाकाण्डे हनूमतो वाग्व्यापारे तस्य व्याकरणवित्वमपशब्दप्रयोगाभावश्च रामेण संकेतितेे।

**नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।**
**बहु व्याहरतानेन न किंचिदपशब्दित मिति।।** (४.३.२९)

पुनश्च तत्रैव सुन्दरकाण्डेऽयमपि समुल्लेखो दृश्यते, यच्छिष्टजना द्विजातयः संस्कृतां वाचं व्यवहरन्ति स्म।

**"यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।**
**रावणं मन्यमाना मां सीता भीता भविष्यती ति"।।** (५.३०.१८-१९)

आर्षमहाकाव्यद्वये वैदिकच्छन्दसामपि संघटना सर्वथा परिवर्तिता दृश्यते। कठ-मुण्डक-श्वेताश्वतरोपनिषदां छन्दःस्वेव वैदिकीनामृतां छन्दोरचनातो लयदृष्ट्या किंचित्परिवर्तनं समुपलभ्यते। अत्रानुष्टुप्-त्रिष्टुब्जगती-छन्दांसि प्रायः प्रयुक्तानि सन्ति। गायत्र्युष्णिग्बृहती-पङ्क्तिच्छन्दांसि तेषां प्रगाथरूपाणि च क्रमशो लुप्तानि रामायणे महाभारते च वर्णवृत्तेषु न केवलमक्षरगणनाऽपितु वार्णिकगणव्यवस्थाऽपि समेधमाना परिदृश्यते।

यद्यप्यार्षमहाकाव्यद्वयेऽष्टाक्षरानुष्टुबेव प्रधानं छन्दः, तदपि त्रिष्टुप्छन्दस इन्द्रवज्रोपेन्द्रवज्रोपजातिभेदानां, जगतीछन्दसश्चेन्द्रवंशावंशस्थतदुपजातिभेदानां च प्रायः शास्त्रीयवार्णिकगणव्यवस्थानुसारं संरचना निबद्धा दृश्यते। जगतीछन्दसोः प्रतिचरणं यगणचतुष्टययोजनापरको भुजङ्गप्रयातच्छन्दोभेदो रामायणे केवलमेकस्मिन् पद्ये प्राप्यते (६.७७.२४)। आर्षमहाकाव्यद्वयेऽतिजगतीच्छन्दसो भेदद्वयं प्रहर्षिणी रुचिरा चेति नैकधा प्रयुक्तः प्राप्यते। अत्र न केवलं छन्दःशास्त्रानुसारं गणव्यवस्था वर्ततेऽपितु प्रतिपादं द्वयोश्छन्दसोः क्रमशः द्विदशभिर्वर्णैश्चतुर्नवभिश्चवर्णैश्चतुर्नवभिश्चवर्णैर्विरति (यति) योजनापि नियतं निबद्धा समुपलभ्यते। अत्रैव सर्वप्रथमं जगत्यतिजगतीछन्दोभ्यां मिश्रिता पुष्पिताग्रा (अयुजिनयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा), त्रिष्टुब्जगतीभ्यां मिश्रितमपरवक्त्र (अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ) इतिच्छन्दोभेदौ विकसितौ दृश्येते। शक्वर्यादिच्छन्दोभेदास्त्वत्र नैव लभ्यन्ते। महाभारतस्य स्वर्गारोहणपर्वणि फलश्रुतौ समुपलभ्यमाने वसन्ततिलकापद्यद्वये शक्वरीछन्दोभेदप्रयोगस्तु केनापि परवर्तिनि काले प्रक्षिप्त इत्यास्माकीनो विचारः।

संस्कृतवाङ्मये महाकाव्यपरम्पराया आविर्भावो यद्यप्यार्षमहाकाव्यद्वय एव सर्वप्रथमं समुपलभ्यते, तथाप्यस्या विकासभांजि बीजानि वैदिकसाहित्यक्षेत्र एवोप्तानि, यानि रामायणे महाभारते च महता महीरुहस्वरूपेण परिणतान्यभूवन्। ऋग्वेद एव प्रायो विंशतिसंख्यकान्याख्यानसूक्तान्युपलभ्यन्ते, यानि वयं महाकाव्यपरम्पराया आदिमं रूपं मन्यामहे। एतान्याख्यानसूक्तानि मूलतो गद्यपद्यमिश्रितान्यासन्निति पाश्चात्त्यविदुष ओल्डेनबर्गमहाशयस्य मतम्। एतेषु सूक्तेष्वाख्यानकथाया विवरणात्मको भागो गद्ये संवादाश्च पद्ये वर्तेते। छन्दोबद्धाः संवादाः कण्ठस्थीकृता बभूवुः, किन्तु वक्तृभेदेनर्त्विग्भिराख्यानानां वर्णनात्मकोऽशः प्रत्यग्रनिबद्धे स्वकीये गद्ये प्रस्तुतीक्रियते स्म। एतेषामाख्यानानामधुना ऋक्छन्दोबद्धाः संवादा एवर्ग्वेदसंहितायामवशिष्टा लभ्यन्ते, यथा, विश्वामित्र-नदीसंवादः, सरमा-पणि-संवादः, यम-यमी-संवादः, उर्वशी-पुरूरवस्संवादः, इन्द्राणी-वृषाकपि-संवादश्च एतेषामाख्यानानां विवरणात्मको नीरसो भागोऽपि यदा कदा छन्दःस्वपि निबध्यते स्मेति गेल्डनीमहोदयस्य राद्धान्तः। मोक्षमूलरः सिलवांलेवीमहोदयश्चैतान्याख्यानसूक्तानि नाट्यरूपाणि मन्यमानौ पूर्वोक्तमतं न स्वीकुरुतः। अन्योऽपि श्रोएदराभिधानः पाश्चात्त्यः पण्डित एतानि सूक्तानि याज्ञिककर्मकाण्डे नाट्यप्रदर्शनरूपाणि मनुते स्म।

आख्यानशब्दस्य प्रथमोल्लेख ऐतरेयब्राह्मणे (१८.३०) शुनःशेपाख्यानविषये समुपलभ्यते। एतदाख्यानं यज्ञकर्मणि होत्रा पठ्यते स्म। अस्मिन्नेव ब्राह्मणग्रन्थे "आख्यानविदिति" शब्दस्य प्रयोगोऽपि प्राप्यते, येनाख्यानकथानां ज्ञातॄणां विशिष्टो वर्गोऽभिहितोऽस्ति। एते आख्यानविदः प्रायः सौपर्णाख्यानं यज्ञकर्मसु श्रावयन्ति स्मेति शतपथब्राह्मणात् (३.६.२.७) परिज्ञायते। तत्रैवेतिहासपुराणमपि पंचमवेदसंज्ञयाऽभिहितं दृश्यते (१३.४.१२.१३)। इदमनुनीयते यत्संहितोत्तरवैदिकयुगे आख्यानमतीतमितिहासः पुराणमित्यादि शब्दानामर्थदृष्ट्या न किमप्यन्तरमासीत्। महाभारतकाव्यं संहिता-पुराणाख्यानेतिहास-संज्ञाभिरप्यभिहितमत्रैव

समुपलभ्यते[1]। रामायणमपि न केवलं काव्यसंज्ञयाऽपितु संहितेतिहासाख्यानसंज्ञाभिरपि तत्रैवाभिहितं दृश्यते[2]।

ब्राह्मणसाहित्ये समुपलभ्यमानान्याख्यानानि, इतिहासाः, पुराकथाश्च परवर्तिनि वैदिकयुगे महाकाव्यपरम्परायाः प्राग्भावि स्वरूपं विवृण्वन्ति। ब्राह्मणग्रन्थानुशीलनेनेदं स्फुटीभवति यदेतेषां कथाकाव्यानां शंसनं गानं वा याज्ञिककर्मसु कौटुम्बिकेषूत्सवेषु च धार्मिकाणां कृत्यानां विनियोगेऽवश्यं विधीयते स्म। अश्वमेधक्रतावेकवर्षं यावत् प्रतिदिवसं पारिप्लवोपाख्यानेषु देवतानां महापुरुषाणां चोपाख्यानान्यत्विग्भिः पौराणिकैर्वा श्राव्यन्ते स्म। एतेषामाख्यानानां वक्तारः प्रायो ब्राह्मणीषु क्षत्रियेभ्यः समुत्पन्नाः प्रतिलोमविवाहसन्ततयः सूता आसन्। सूतगायकैरेतान्याख्यानानि तन्त्रीवादनेन समं गीयन्ते स्म। एतेष्ववसरेषु तैः सह द्वौ तन्त्रीवादकावपि सहभागिनावास्ताम्। रामायणेनैतत् सुविज्ञातं भवति यदादौ रामसभायां रामायणकथा कुशीलवाभ्यां तन्त्रीवाद्येन सह सलयं प्रगीताऽऽसीत्।

"तौ चापि मधुरं रक्तं स्वचित्तायतनिःस्वनम्।
तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम्" इति।। (१.४.३४)

अन्तर्वत्न्याः सीमन्तोन्नयनसंस्कारेऽपि नियतं कस्यापि राज्ञो नाराशंसिनी गाथा, सोमदेवतायाः किमपि सूक्तं वा तन्त्रीवादनेन सार्धं गर्भस्थशिशोर्मङ्गलकामनायै गर्भिणीं स्त्रियं श्रावयितुं गीयते स्म। अद्यापि नैष्ठिकेषु भारतीयेषु सीमन्तसंस्कारसमयेऽन्तर्वत्नी तन्त्रीवादनं संश्राव्यत इति प्रथा प्रचलितास्ति। प्रेतस्य शवदाहानन्तरं कुटुम्बजनान् सान्त्वयितुमपि पुराणकथाः श्राव्यन्ते स्मेति प्राचीनसाहित्यानुशीलनेन सुविज्ञातं भवति। महाकविना बाणेन हर्षचरिते एतस्याः प्रथायाः समुल्लेखो विहितः।

"देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं शोकापनयननिपुणाश्च पौराणिकाः पर्यावारयन्।" (हर्षचरितम्, पंचम उच्छ्वासः) इदानीमपि मृतव्यक्तेदर्शगात्रश्राद्धदिवसेषु प्रत्यहं कौटुम्बिका गरुडपुराणकथाः शृण्वन्तीति प्रथा दृग्गोचरीक्रियते।

वैदिकवाङ्मये व्यस्ताख्यानान्येव नोपलभ्यते, तत्राख्यानचक्राण्यप्यासन्। एतादृश आख्यानचक्रेष्वेकमेवाख्यान-चक्रं सुपर्णाख्यानमधुनावशिष्टं दृश्यते, यत्र सपत्न्योः कद्रूविनतयोः प्रतिस्पर्धायाः, गरुडस्य सर्पाणांच परस्परं वैरभावस्य मातुर्दास्यभावमपाकर्तुं गरुडस्य स्वर्गादिन्द्रेण सह युद्ध्वा मृतानयनस्य च कथाचक्रं वैदिकसंहितायाः खिलभागे सुपर्णाध्याये वर्तते। एतदाख्यानं छन्दःसंरचना-दृष्ट्या प्रायो विक्रमाद्दशमशताब्दपूर्वं बभूवेति विदुषां मत्। इदमाख्यानचक्रं महाभारतस्यादिपर्वणः आस्तीकोपपर्वण्यपि काव्यरूपेण निबद्धं दृश्यते[3]।

प्राचीनभारतीयवाङ्मये इतिहास-पुराणमपि विद्यासु परिगण्यते स्म। छान्दोग्योपनिषदि

---

१. महाभारत आदिपर्व १.१८, १९, २६, ७२, '२, १०३ इत्यादि
२. रामायणम् ६.१२८, ११७, १२१, १२६१
३. छान्दोग्योपनिषद् ७.१.२

सनत्कुमारमुपदेशार्थं प्रार्थयता नारदेन स्वाधीतासु विद्यासु पंचमवेदस्येतिहास-पुराणस्याप्युल्लेखः कृतः[1]।

इतिहास-पुराणे देवानां, दानवानामप्सरसां, नागदेवीनां च कथाः, ऋषीणां राज्ञांच नाराशंसिन्यो गाथा दानस्तुतयश्च आसन्। विदुषां मते इतिहासपुराणवीरगाथानामपि पुरातनं संकलनमासीत्। इदमनुमीयते यत् संहितोत्तरवैदिकयुगे एतादृशीनां कथानां नाराशंसिनीनां गाथानां तत्सम्बनिधनामाख्यानानांच कोऽपि सङ्ग्रहो वर्तते, किन्त्वधुनैतादृक् किमपि संकलनं नोपलभ्यते। एषामाख्यानानां विशालः संग्रहः सर्वप्रथमं महाभारत एव समुपलभ्यते। पुराकाले इतिहासपुराणाख्यानानामानुवंशिकपरम्परया कथावाचका गायका वाऽऽसन्, ये खलु ऐतिहासिकाः, पौराणिकाश्चेत्युपाधिना विश्रुता बभुवुः। रोमहर्षणपुत्रः सौतिरित्यपराभिधान उग्रश्रवा महाभारतादौ पौराणिकोपाधिनैवाभिहितो दृश्यते[2]। एते पौराणिकाः सूता न केवलं राज्ञामृषीणां च वंशानुचरितस्य विवरणं संगृहृणन्ति स्म, अपितु युद्धानामपि विवरणं सङ्गृह्य तेषां प्रभावोत्पादिन्या रोमहर्षण्या शैल्या वर्णनं व्यधुः। युद्धादीनां वर्णने सूताः आशुकाव्यस्य रचनां विधति स्म। एते सङ्ग्रामभूमावपि राज्ञां सारथिरूपेण व्यवहरन्तः प्रत्यक्षीकृते स्वानुभवं युद्धवर्णने प्रकटीकुर्वन्तो दृश्यन्ते। महाभारते कानीनस्य कर्णस्य पालकः पिताऽधिरथः, प्रज्ञाचक्षुषं धृतराष्ट्रं दिव्यदृशा महाभारतयुद्धं दर्शं दर्शं वर्णयन् संजयश्च सूतजातीयावेवास्ताम्। एतावता महाकाव्यपरम्परा बीजरूपेण सम्बद्धान्याख्यानानि मन्त्रद्रष्टॄणामृषीणां वाङ्मयरूपेण नोद्भूतानि, किन्तु मागधवर्गीयाणां सूतानां साहित्यरूपेणैवाविर्भूतानि। संस्कृतसाहित्यानुशीलनेनेदं ज्ञायते यदेते सूताः राजद्वारे राज्ञामास्थनमण्डपेषु यात्रासु च तिष्ठन्तः प्रत्यहं समयानुरूपं काव्यं राज्ञां च विवरणं श्रावयन्ति स्मेति कालिदासमाघ-श्रीहर्षादीनां काव्यैः प्रमाणीकर्तुं शक्यम्[3]।

वररुचिना वार्तिकेऽपि आख्यानशब्देन सह इतिहासपुराणयोरपि उल्लेखः कृतः –
**आख्यानाख्यायिकेतिहासपुराणेभ्यश्च** (४.२.६०)

मुनिना पाणिनिनाऽऽख्यानशब्दस्य कथासाहित्यार्थे प्रयोगो विहितः सूत्रे (६.२.१०३) तेनान्यस्मिन् सूत्रे शिशुक्रन्दीय, यमसभीय, इन्द्रजननीयेति शब्दानां व्याकृतिं संकेतितवता तद्धितप्रकरणे छ-प्रत्ययविधाने केषांचिदाख्यानानामप्युल्लेखः कृतः "शिशुक्रन्दयमसभ-

---

१. स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेद सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पंचमं वेदानां वेदं" ..।
एतद्भगवोऽध्येमि।।

२. महाभारत आदि पर्व अध्यायाः २०-३४
लोमहर्षणपुत्रउग्रश्रवाः सौतिः पौराणिकः। महा. १.१.१

३. सूतात्मजाः सवयसः प्रथितप्रबोधं प्राबोधयन्नुषसि वाग्भिरुदारवाचः।। (रघु ५.६५)
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः परिणतिमितिरात्रेमागधा माधवाय।। (शिशु ११.१)
उपासनामेत्य पितुः स्म रज्यते दिने दिने सावसरेषु वन्दिनाम्।
पठत्सु तेषु प्रतिभूपतीनलं विनिद्ररोमाजनिशृण्वती नलम्।। (नैष. १.३४)]

द्वन्द्वेन्द्रजननादिभ्यश्छः (४.३.८८) इति। डाक्टरवासुदेवशरणा[1] ग्रवालमहोदयानामिदं मतं यच्छिशुक्रन्द्रीयं किमपि कृष्णचरितमाख्यानं, यमसभीयं किमपि यमसभासंबद्धमाख्यानं, इन्द्रजननीयमितिचेन्द्रजन्मनो वृत्रवधस्य च वर्णनपरकमाख्यानमासीत्। क्रतूक्थादिसूत्रान्ताट्ठक् (४.२.५०) इति पाणिनिसूत्रे ठक्प्रत्ययविधाने "आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ठग्वक्तव्यः इति भाष्ये पतंजलिना यावक्रीतिकः प्रैयङ्गवीकः यायातिकः इति शब्दान् व्याकृतिं निर्दिशता, यावक्रीतं, प्रैयङ्गव यायातमिताख्यानत्रयी समुदाहता"[2]। दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु (६.२.१०३) अस्मिन् सूत्रे पाणिनिना आख्यानवाचकशब्दे परे पूर्ववर्तिनि दिग्वाचके शब्दे अन्तोदात्तत्वं स्वीकृतम्। उदाहरणानि च पूर्वयातम्, पूर्वयायातम्, पूर्ववानराटम् दत्तानि। (सिद्धान्तकौमुदी सूत्र सं.३८३७)

संहितोत्तरवैदिकयुगे सूतैर्गीतानि यान्याख्यानानि विशेषतया लोकप्रियान्यासन्, तेषु दाशरथे रामस्य गाथा भारत-युद्धस्य गाथा च प्रमुखे बभूवतुः। पूर्वस्यां गाथायां आर्यसंस्कृतेरार्येतरसंस्कृत्या सह संघर्षस्यार्येतरक्षेत्रे संस्कृतेः प्रसारस्य चाख्यानमासीत्, अपरस्यांच एकस्यैव वंशस्य दायादानां (शान्तनोः प्रपौत्राणां) परस्परं वैमनस्यस्य विग्रहस्य चैतादृक् पुरावृत्तवर्णनमासीद् यत्रआर्यावर्तस्य प्रायः सर्वेऽपि क्षेत्रीया राजानो कस्याप्येकस्य पक्षे महाभारतयुद्धे योयुध्यमाना दरीदृश्यन्ते। पौराणिकैः सूतैः प्रगीतयोरेतयोर्गाथयोः कथाद्वयमाधृत्य प्राचेतसेन वाल्मीकिना पाराशरेण कृष्णद्वैपायनेन च क्रमशो "रामायणं", "जयेत्यपराभिधानं भारतम्" चेति महाकाव्यद्वयं निबद्धम्। एतावता आर्षमहाकाव्यद्वयेनैव भारतीयवाङ्मये सर्वप्रथमं महाकाव्यरचनाविधौ प्रबन्धनिर्माणप्रयासः परिलक्ष्यते।

एतयोरादौ वाल्मीकिना रामायणं विरचितं यद्वा द्वैपायनेन भारतमितिविषये रचनाकालविषये च विदुषां मतवैभिन्न्यं प्राप्यते। वयं तु आदिकविपदेत्युपाधिना विश्रुतस्य वाल्मीकेस्तद्रचितस्य रामायणस्यैव प्राग्भावितां स्वीकुर्मः। याकोबीत्यभिधानः शर्मण्यपंडितोऽमरीकीयो रॉबर्टगोल्डमैनमहाशयोऽप्यनेके पाश्चात्त्या विद्वांसोऽपि इदमेव मतमुरीकुर्वन्ति। सुकथणकर, कृष्णमाचारी-राघवन्-पुसालकर-आचार्यबलदेवोपाध्यायप्रभृतयो भारतीया मनीषिणोऽपि वाल्मीकिरामायणस्य प्राग्भावितां प्रमाणयन्तो द्वैपायनस्य जयेत्यभिधानं भारतकाव्यं पश्चाद्भावि मन्वते।

एतयोर्महाकाव्ययो रचनाकालविषये तत्तल्लेखेषु ग्रन्थेऽस्मिन् सुविचारः कृतोऽस्ति। उभयोर्महाकाव्ययो रचनाया मौलिकोंऽशः निःसन्देहं तथागताद् बुद्धादपि प्राचीनोऽस्ति। रामायणस्य मूलरचनायाः कालं यावत् मगधसाम्राज्यस्य सत्ता नासीत्, न चापि पाटलिपुत्रनाम नगरं स्थापितं बभूव। किन्तु भारत-काव्ये मौलिकांशस्य (उर-महाभारत) रचनाकालं यावत् मगधसाम्राज्यं प्रमुखं प्रबलं च परिलक्ष्यते तथापि मगधसम्राजो जरासन्धस्य राजधानी गिरिव्रजं यद्वा

---

१. डॉ. अग्रवालस्य "इण्डिया एज नोन टु पाणिनि" ग्रन्थः पृ.३४०

२. द्रष्टव्य- "यावक्रीताधिकारेण कृतमाख्यानमुपचाराद् यावक्रीतशब्देनोच्यते। एवं प्रैयङ्गवमधिकारकृताख्याना-ख्यायी प्रैयङ्गविकः कैयटः प्रदीप पृ.१७५ (महाभाष्य चतुर्थ खण्ड)]

